## क्रय्य पुस्तक नवातयार हुवा

व्रतराज सटिप्पण ............
रामाश्वमेध नया छपेला वडा अक्षर ....... .........
गर्गसंहिता ....................
चिकित्साक्रमकल्पवल्ली ........
पूजापंकजभास्कर ............
ईशादिदशोपनिषत् ............
प्रतिष्ठासारसंग्रह ............
संस्कारभास्कर ...... .......

गीतगोविंद सटीक सटीकराधा विनोदसमेत...............
हनुमन्नाटक सटीक ............
द्वारकामाहात्म्य ................
सिद्धांतकौमुदी ..............
लघुसिद्धांतकौमुदी अक्षर वडा और जाडा सूत्रवृत्तिखुली
सारस्वतपूर्वार्धमूळमात्र ....
सारस्वतप्रसादटीकासहित....

सिद्धांतचंद्रिकासुबोधिनीटीका सहित वडाअक्षरखुलापत्र
सिद्धांतचंद्रिकाउत्तरार्धमात्र
सारस्वततीनोवृत्तीमूळमात्र
धातुरूपावली ..............
शब्दरूपावली एकाक्षरीकोश सहित ....................
समासचक्र....................

ॐ श्रीगणेशाय नमः॥ हरिः ॐ॥ अथ प्रयोजनसंहिता प्रारंभः॥ तत्र
संध्यामंत्राः॥ ॐ तत्सवितुर्वरेण्यम्भर्गो देवस्य धीमहि॥ धियो यो नः
प्रचोदयात्॥१॥ ॐ सूर्यश्च मा मन्युश्च मन्युपतयश्च मन्युकृते
भ्यः पापेभ्यो रक्षन्ताम्. यद्राव्या पापमकार्षम्मनसा वाचा हस्ताभ्या
म् पद्भ्यामुदरेण शिश्ना रात्रिस्तदवलुंपतु यत्किञ्चिदुरितं मयि।इ
दमहं मामृतयोनौ सूर्येज्योतिषि जुहोमि स्वाहा॥२॥ ॐ आपः पुन
न्तु पृथिवीं पृथ्वी पूता पुनातु मां पुनन्तु ब्रह्मणस्पतिर्ब्रह्म पूता पुनातु

मां यदुच्छिष्टमभोज्यं यद्वादुश्चरितंमम सर्व्वम्पुनन्तुमांमापो सता
श्च प्रतिग्रहं स्वाहा ॥३॥ ॐ अग्निश्च मामन्न्युश्च मन्न्युपतयश्च
मन्न्युकृतेभ्यः पापेभ्यो रक्षन्ताम् यदह्ना पापमकार्षं मनसा वाचा ह
स्ताभ्याम् पद्भ्यामुदरेण शिश्ना अहस्तदवलुंपतु यत्किञ्चिद्दुरितंम
यि इदमहमाममृतयोनौ सत्ये ज्योतिषि जुहोमि स्वाहा ॥४॥ ॐ
आपोहिष्ठामयोभुवस्तानऽऊर्ज्जेदधातन । महेरणायचक्षसे ॥५
॥योवःशिवतमोरसस्तस्यभाजयतेहनः । उशतीरिवमातरः ॥६॥

तस्म्माऽअरंङ्गमामवोयस्यक्षयायुजिन्वथ॥आपोजनयथाचनः
॥७॥ॐसुमित्रियानऽआपऽओषधयःसन्तु दुर्म्मित्रियास्त
स्म्मैसन्तुयोस्म्मान्द्वेष्टियञ्चवयन्द्विष्म्मः॥८॥ॐद्रुपदादिवमुमु
चानःस्विन्नःस्नातोमलादिव॥पूतम्पवित्त्रेणेवाज्ज्यमापःशुन्धन्तु
मैनसः॥९॥ॐऋतञ्चसत्त्यञ्चाभीद्धात्तपसोध्यजायत ततोरा
त्र्यजायतततःसमुद्रोअर्णवः समुद्रादर्णवादधिसंवत्सरोऽअजा
यत अहोरात्त्राणिविदधद्विश्वस्यमिषतोवशी सूर्य्याचंद्रमसौ

धातायथापूर्वमकल्पयत् दिवञ्चपृथिवीञ्चान्तरिक्षमथोस्वः॥१०
॥ॐउद्वयन्तमसस्परिस्वःपश्यन्तऽउत्तरम्। देवन्देवत्रासूर्य्यमग
न्मज्ज्योतिरुत्तमम्॥११॥ॐउदुत्यञ्जातवेदसन्देवंवहन्तिकेतवः
॥ दृशेविश्वायसूर्य्यम्॥१२॥ॐचित्रन्देवानामुदगादनीकञ्चक्षु
र्म्मित्रस्यवरुणस्याग्नेः॥आप्राद्यावापृथिवीऽअन्तरिक्षꣳसू
र्य्यऽआत्माजगतस्तस्थुषश्च॥१३॥ॐतच्चक्षुर्द्देवहितम्पुरस्ताच्छु
क्रमुच्चरत्॥पश्येमशरदःशतञ्जीवेमशरदःशतꣳशृणुयामशर

दः शतम्प्रब्रवाम शरदः शतमदीनाः स्याम शरदः शतम्भूयश्च शरदः शतात्॥१४॥ ॐ तेजोसि शुक्रममृतमायुष्पा ऽआयुर्म्मे पाहि। देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्याम्पूष्णो हस्ताभ्यामाददे॥१५॥ ॐ देवा गातुविदो गातुं वित्वा गातुमित। मनसस्पत ऽइमन्देव यज्ञ छं स्वाहा वाते धाः॥१६॥ ॥अथ तर्प्पणमन्त्राः॥ ॥आयन्तु नः पितरः सोम्यासो ग्निष्वात्ताः पथिभिर्द्देवयानैः॥ अस्मिन्यज्ञे स्वधया मदन्तो धिब्रुवन्तु ते वन्त्वस्मान्॥१॥ उदीरतामवर ऽउत्परास ऽउन्मध्य

माऽपितरः÷सोम्म्यासः॥असुंम्यऽईयुरवृकाऽऋतज्ञास्तेनोवन्तुपितरो
हवेषु॥२॥अङ्गिरसोनः÷पितरोनवंग्वाऽअथर्व्वाणोभृगवः÷सोम्म्या
सः÷तेषांव्वयꣳसुमतौयज्ञियानामपिभद्रेसौमनसेस्याम॥३॥आय
न्तुनः÷पितरः÷स्म्मान्॥४॥ऊर्ज्जंव्वहन्तीरमृतंघृतम्पयः÷कीलालम्प
रिस्रुतम् स्वधास्थतर्प्पयतमेपितॄन्॥५॥पितृभ्यः÷स्वधायिभ्यः÷
स्वधानमः÷पितामहेभ्यः÷स्वधायिभ्यः÷स्वधानमः÷प्रपितामहेभ्यः÷
स्वधायिभ्यः÷स्वधानमः÷अक्षन्पितरोमीमदन्तपितरोतीतृपन्तपित

रः पितरः शुन्धध्वम् ॥६॥ येचेह पितरो येच नेह याँश्च विद्मया२ं॥
ऽउच नप्रविद्म॥ त्वं वेत्थ यति ते जातवेदः स्वधाभिर्य्यज्ञ र्ठ० सुकृत
ञ्जुषस्व ॥७॥ मधुवाताऽऋतायते मधुक्षरन्ति सिन्धवः॥ माध्वी
र्न्नः सन्त्वोषधीः॥८॥ मधुनक्तमुतोषसो मधुमत्पार्थिव र्ठ० रजः
मधुद्यौरस्तु नः पिता॥९॥ मधुमान्नो व्वनस्पतिर्म्मधुमा२ं॥
ऽअस्तु सूर्य्यः माध्वीर्ग्गावो भवन्तु नः॥ नमो वः पितरो रसाय नमो
मोवः पितरः शोषाय नमो वः पितरो जीवाय नमो वः पितरः स्व

धायैनमोवः पितरो घोरायनमोवः पितरो मन्न्यवे नमोवः पितरः सं.
पितरोनमोवोगृहान्नः पितरोदत्तसतोवः पितरो देष्मैतद्वः पित
रोव्वासः ॥११॥ अथपूजनमंत्राः ॥ अथासनमंत्रः ॥ पृथ्वीत्वया
धृतालोकादेवीत्वंविष्णुनाधृता॥ त्वञ्च धारय मांदेविपवित्रंकुरु
चासनं भूमिशुद्धिमंत्रः ॐमहीद्यौःपृथिवीचनऽइमंय्यज्ञम्मि
मिक्षताम्॥पिपृतान्नोभरीमभिः ॥१॥ भूतशुद्धिमंत्रः॥ॐये ४
भूतानामधिपतयोव्विशिखासः कपर्दिनः॥तेषा छंसहस्त्रयो

जनेव धन्न्वोनि तन्न्मसि ॥२॥ मातृका मंत्रः ॥ ॐ अम्बेऽ अ
म्बिके अम्बालिके न मानयति कश्चन ॥ ससंस्त्यश्वकः सुभ
द्रिकाङ्काम्पीलवासिनीम् ॥३॥ प्राणप्रतिष्ठा मंत्राः ॥ ॥ ॐ अयम्पु
रो भुवस्तस्य प्प्राणो भौवायनो व्वसन्तः प्प्राणायनो गायत्री
व्वासन्ती गायत्र्यै गायत्रङ्गायत्रादुपांशुरुपांशोस्त्रिवृत्रि
वृत्तो रथन्तरं व्वसिष्ठऽ ऋषिः प्प्रजापतिगृहीतया त्वया प्प्राणङ्गृ
ह्णामि प्प्रजाभ्यः ॥४॥ अयन्दक्षिणा व्विश्वकर्म्मा तस्य मनो

सं.

ध्रैश्वकर्म्मणङ्गी ष्मो मनुसत्त्रिष्टुब्ध्रैष्मी त्रिष्टुभ ÷ स्वारठं स्वारादं
न्तर्य्यामोन्तर्य्यामात्पेञ्चदशः पेञ्चदशाद्बृहद्बृहतो भरद्वाज ऽऋषिं ÷ प्प्र
जापतिगृहीतया त्वया मनो गृह्णामि प्प्रजाभ्यं ÷ ॥ ५ ॥ अयम्पश्चा
द्विश्वव्यचास्तस्य चक्षुर्वैश्वव्यचसं वर्षाश्चाक्षुष्योजगती
वार्षीजगत्त्या ऽऋक्कसमृक्कसमाच्छुक्रः शुक्रात्त्सप्तदशः
सप्तदशाद्वैरूपं वैरूपाज्जमदग्निर्ऋषिं ÷ प्प्रजापतिगृहीतया त्वया
चक्षुर्गृह्णामि प्प्रजाभ्यं ÷ ॥ ६ ॥ इदमुत्तरात्स्वस्तस्य श्रोत्रं

५

सौवर्ठ॰ शरच्छ्रौत्र्यनुष्टुप्प् शारद्यनुष्टुभऽ एडमैडान्मन्थी मन्थिनऽ
एकविꣳशऽ एकविꣳशाद्वैराजं व्विश्श्वामित्त्रऽऋषिः प्प्रजाप
तिगृहीतया त्वया श्श्रोत्त्रं गृह्णामि प्प्रजाब्भ्यः ॥७॥ इयमुपरिम
तिस्तस्यै वाङ्मात्या हेमन्तो व्वाच्यः पङ्क्तिर्हैमन्ती पङ्क्त्यै नि
धनन्निधनवतऽ आग्ग्रयणऽ आग्ग्रयणात्त्रिणवत्त्रयस्त्रिꣳ
शौ त्रिणवत्त्रयस्त्रिꣳशाब्भ्याꣳ शाक्वररैवते व्विश्श्वकर्म्मऽ
ऋषिः प्प्रजापतिगृहीतया त्वया व्वाचं गृह्णामि प्प्रजाब्भ्यो लो

कन्ताऽइन्द्रम्॥८॥ ॥पञ्चगव्यमंत्राः॥ ॥ओँतत्सवितु÷र्व्यात् सं.
॥९॥गन्धद्वारांदुराधर्षां नित्यपुष्टांकरीषिणीम्॥ईश्वरींसर्वभूतानां
तामिहोपह्वयेश्रियम्॥१०॥आप्यायस्वसमेतुतेविश्वत÷सोम
वृष्ण्यम्॥भवावाजस्यसंगथे॥११॥दधिक्राव्णोऽअकारिष
जिष्णोरश्वस्यवाजिन÷॥सुरभिनोमुखाकरत्प्रणऽआ
यूंषितारिषत्॥१२॥घृतम्मिमिक्षेघृतमस्ययोनिर्घृतेश्रि ६
तोघृतम्वस्यधाम॥अनुष्वधमावहमादयस्वस्वाहाकृ

तंवृषभव्वक्षिहृव्यम्॥१३॥देवस्यत्वासवितुः प्रसवेश्विनो
र्बाहुभ्याम्पूष्णोहस्ताभ्याम्॥१४॥ ॥देवतोत्थापनमंत्राः॥
ॐ उत्तिष्ठब्रह्मणस्स्पतेदेवयन्तस्त्वेमहे॥उपप्रयन्तुमरुतः सुदा
नवऽइन्द्रप्राशूर्भवासचा॥१५॥ प्रतिष्ठामंत्रः॥ ॐ मनोजूतिर्ज्जु
षतामाज्ज्यस्स्यबृहस्प्पतिर्य्यज्ञमिमन्तनोत्वरिष्टंय्यज्ञꣳसमिम
न्दधातु॥विश्वेदेवासऽइहमादयन्तामोꣳप्रतिष्ठ॥१६॥ आवाह
नमंत्रः॥ धामच्छदग्निरिन्द्रोब्रह्मादेवोबृहस्प्पतिः॥सचेतसोवि

श्वैदेवायज्ञम्प्रावेन्तुनः शुभे॥१७॥ आसनमंत्रः॥ ॐ त्वंयविष्ठ सं.
दाशुषोनॄः पाहिशृणुधीगिरः ॥रक्षोतोकमुतत्मना॥१८॥ ॥अर्घ्यम
न्त्रः॥ ॐ सहस्रशीर्षापुरुषः सहस्राक्षः सहस्रपात्॥सभूमिं
सर्वतस्पृत्वात्यतिष्ठद्दशाङ्गुलम्॥१९॥ ॥आचमनमंत्रः॥ ॐ
शन्नोदेवीरभिष्टयऽआपोभवन्तुपीतये॥शंय्योरभिस्रवन्तु
नः॥२०॥ ॥स्नानमंत्रः॥ ॐ आपोहिष्ठामयोभुवस्तानऽऊ ७
र्ज्जेदधातन॥महेरणायचक्षसे॥२१॥योवः शिवतमोरसस्त

स्य भाजयतेह नः॥ उशतीरिव मातरः॥२२॥ तस्मा ऽअरं गमाम वो
यस्य क्षयाय जिन्वथ॥ आपो जनयथा च नः॥२३॥ ॥अथ पंचा
मृतस्नानमंत्राः॥ तत्र पयोमंत्रः॥ ॐ पयः पृथिव्यां पय ऽओषधीषु
पयो दिव्यन्तरिक्षे पयो धाः। पयस्वतीः प्रदिशः सन्तु मह्यम्॥
॥२४॥ दधिमंत्रः॥ ॐ दधिक्राव्णो ऽअकारिषं जिष्णोरश्वस्य वा
जिनः। सुरभि नो मुखा करत्प्रण ऽआयूंषि रिणत्॥२५॥ ॥घृत
मंत्रः॥ ॐ घृतं मिमिक्षे घृतमस्य योनिर्घृते श्रितो घृतम्वस्य

धामं॥अनुष्वधमावहमादयस्वस्वाहाकृतंवृषभवक्षिहव्यम्॥२६
॥मधुमंत्रः॥ॐमधुवाताऋतायतेमधुक्षरन्तिसिन्धवः॥माध्वीर्न्नः
सन्त्वोषधीः॥२७॥मधुनक्तमुतोषसोमधुमत्पार्थिवꣳरजः।मधु
द्यौरस्तुनःपिता॥२८॥मधुमान्नोवनस्पतिर्म्मधुमाꣳ॥ऽअस्तु
सूर्य्यः माध्वीर्ग्गावोभवन्तुनः॥२९॥ ॥शर्करामंत्रः॥ॐअपाꣳ
रसमुद्वयसꣳसूर्य्येसन्तꣳसमाहितम्।अपाꣳरसस्ययोरस
स्तंवोगृह्णाम्म्युत्तममुपयामगृहीतोसीन्द्रायत्वाजुष्टंगृह्णाम्म्येषते

योनिरिन्द्रोयत्त्वाजुष्टतमम्॥३०॥ ॥पुनःशुद्धोदकस्नानमंत्रः॥ॐ सद्योजातम्प्रपद्यामिसद्योजातायवैनमः॥ भवे भवेनातिभवे भवस्वमांभवो द्भवायनमः॥३१॥ ॥वस्त्रमंत्रः॥ॐ युवासुवासाःपरिवीतऽआगा त्सऽउश्रेयान्भवतिजायमानः तं धीरास्सः कवयऽउन्नेयन्तिस्वाध्यो मनसादेवयन्तः॥३२॥ अथ यज्ञोपवीत मंत्रः॥ॐ यज्ञोपवीतंपर मंपवित्रम्प्रजापतेर्यत्सहजंपुरस्तात्। आयुष्यमग्र्यंप्रतिमुञ्चशुभ्रं यज्ञोपवीतंबलमस्तुतेजः॥३३॥ ॥अथसुगन्धिद्रव्यमंत्रः॥ॐ

अहिरिव भोगैः पर्य्येति बाहुं ज्याया हेतिम्परिबाधमानः॥ हस्तघ्नो
विश्वा वयुनानि विद्वान्पुमान्पुमांसं परिपातु विश्वतः॥ ॥
चंदनमंत्रः॥ॐ त्वाङ्गन्धर्व्वाऽअखनँस्त्वामिन्द्रस्त्वाम्बृहस्पतिः
॥त्वामोषधे सोमो राजा विद्वान्यक्ष्मादमुच्यत॥३५॥ ॥अक्षत
मंत्रः॥ॐ अक्षन्नमीमदन्तह्यव प्रियाऽअधूषत॥अस्तोषत स्व
भानवो विप्रा नविष्ठया मती योजान्विन्द्र ते हरी॥३६॥ ॥पुष्पमं-
त्रः॥ॐ यत्पुरुषं व्यदधुः कतिधा व्यकल्पयन्। मुखं किम

स्यासीत्किम्बाहू किमूरूपादाऽउच्येते ॥३७॥ ॥ बिल्वमंत्रः ॥ त्र्यम्ब
कंयजामहे सुगन्धिम्पुष्टिवर्द्धनम् । उर्वारुकमिवबन्धनान्मृत्योर्म्मु
क्षीयमामृतात् ॥३८॥ ॥ तुलसीमंत्रः ॥ ॐ इदंविष्णुर्विचक्रमेत्रेधा
निदधेपदम् ॥ समूढमस्स्यपांसुरेस्वाहा ॥३९॥ ॥ दूर्वामंत्रः ॥ ॐ
काण्डात्काण्डात्प्ररोहन्ती परुषःपरुषस्परि एवानोदूर्वेप्रतनुस
हस्रेण शतेनच ॥४०॥ ॥ धूपमंत्रः ॥ ॐ धूरसि धूर्व धूर्वन्तन्धूर्व तंय्यो
स्स्मान्धूर्वतितन्धूर्वयंवयन्धूर्वामः ॥ देवानामसिवन्हितमंसस्नि

मंत्र तमुम्यप्रितमजुष्टंतमन्देवहूतेमम्॥४१॥ दीपमंत्रः॥ॐ अग्निर्ज्ज्यो सं.
१० तिर्ज्ज्योतिरग्निःस्वाहा सूर्य्योज्ज्योतिर्ज्ज्योतिःसूर्य्यःस्वाहा।
अग्निर्व्वर्च्चोज्ज्योतिर्वर्च्चःस्वाहा सूर्य्योव्वर्च्चोज्ज्योतिर्व्वर्च्चःस्वा
हा॥ज्योतिःसूर्य्यःसूर्य्योज्ज्योतिःस्वाहा॥४२॥ ॥नैवेद्यमंत्रः॥
ॐ अन्नपतेन्नस्यनोदेह्यनमीवस्यशुष्मिणः॥प्रप्रदातारंतारि
षऽऊर्ज्जन्नोधेहिद्विपदेचतुष्पदे॥४३॥ ॥फलमंत्रः॥ॐ याः १०
फलिनीर्य्याऽअफलाऽअपुष्पायाश्चपुष्पिणीः।बृहस्पति

प्रसूतास्तानो मुञ्चन्त्वꣳहसः ॥४४॥ ॥दक्षिणा मंत्रः॥ ॐ हिर
ण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेकऽआसीत्। सदा
धार पृथिवीन्द्यामुतेमाङ्कस्मै देवाय हविषा विधेम॥४५॥ पुष्पा
ञ्जलिमंत्रः॥ ॐ यज्ञेन यज्ञमयजन्त देवास्तानि धर्म्माणि प्रथमा
न्यासन्। तेह नाकम्महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति
देवाः॥४६॥ ॥आर्त्तिमंत्रः॥ ॥आरात्रि पार्थिवꣳ रजः पितुर
प्रायिधामभिः। दिवः सदाꣳसि बृहती वितिष्ठस ऽआत्वेषं

वर्त्तितमः॥४७॥ ॥अथस्वस्त्ययनमंत्राः॥ ॥हरिः॑ॐ स्वुस्ति
नुऽइन्द्रो॑ वृद्धश्र॑वाः स्वुस्तिनः॑ पूषाव्विश्ववे॑दाः॥स्वुस्तिनुस्ता
र्क्ष्योऽअरि॑ष्टनेमिः स्वुस्तिनोुबृहस्पति॑र्द्दधातु॥१॥पयः॑ पृथिव्व्या
म्पयुऽओष॑धीषुपयो॑ दिुव्व्यन्तरि॑क्षेपयो॑धाः।पय॑स्वतीः प्प्रुदि
शः॑ सन्तुमह्य॑म्॥२॥व्विष्णो॑ररा॑टमसिुविष्णोः॑ श्नप्त्रे॑स्त्थोव्वि
ष्णोुः स्यूर॑सिव्विष्णो॑र्द्ध्रुवो॑सि।व्वैष्णुवम॑सिुव्विष्ण॑वेत्वा॥३॥अुग्नि
र्द्देवताुव्वातो॑देवताु सूर्य्यो॑ देवता चुन्द्रमा॑ देवताुव्वस॑वोदेवताुरुद्द्रा

देवतादित्यादेवतामरुतोदेवताविश्वेदेवादेवताबृहस्पतिर्देवतेन्द्रो
देवताव्वरुणोदेवता॥४॥ द्यौः शान्तिरन्तरिक्षꣳ शान्तिः पृथिवी शा
न्तिरापः शान्तिरोषधयः शान्तिः॥ वनस्पतयः शान्तिर्विश्वेदे
वाः शान्तिर्ब्रह्म शान्तिः सर्वꣳ शान्तिः शान्तिरेव शान्तिः सा
मा शान्तिरेधि॥५॥ विश्वानिदेवसवितर्दुरितानिपरासुव॥ यद्भद्र
न्तन्नऽआसुव॥६॥ इमारुद्रायतवसेकपर्दिनेक्षयद्वीरायप्रभरा
महेमतीः। यथाशमसद्द्विपदेचतुष्पदेविश्वंपुष्टंग्रामेऽअस्मि

णायच॥२॥सुत्रस्स्यऽऋद्धिरस्यगन्मज्ज्योतिरमृताऽअभू
म।दिवम्पृथिव्याऽअद्ध्यारुहामाविदामदेवाँन्त्स्वर्ज्ज्योतिः।३।
द्यौःशान्तिरेधि॥४॥ ॥अथकलशस्थापनमंत्राः॥ भूस्पर्शः॥
भूरसिभूमिरस्यदितिरसिविश्श्वधायाविश्श्वस्स्यभुवन
स्स्यधर्त्री॥पृथिवीँयच्छपृथिवीन्दृꣳहपृथिवीम्माहिꣳसीः
॥१॥धान्यप्र०मंत्रः॥धान्न्यमसिधिनुहिदेवान्प्प्राणायत्वोदा
नायत्वाव्यानायत्वा॥दीर्घामनुप्प्रसितिमायुषेधान्देवोवः स

विताहिरेण्यपाणिः। प्रतिगृभ्णात्वच्छिद्रेण पाणिना चक्षु
षेत्वामहीनाम्पयोसि॥२॥ ॥कलशस्थापनमंत्रः॥३॥ आ
जिंघ्रकलशम्मह्या त्वाविशन्त्विन्दवः पुनरूर्ज्जानिवर्त्त
स्वसानः सहस्रन्धुक्ष्वोरुधारा पयस्वती पुनर्म्माविशताद्रयिः
॥३॥ ॥जलमंत्रः॥ ॥वरुणस्योत्तम्भनमसि वरुणस्यस्क
म्भसर्ज्जनीस्थो वरुणस्य ऽऋतसदन्यसि वरुणस्य ऽऋ
तसदनमसि वरुणस्य ऽऋतसदनमासीद॥४॥ वसोः पवि

त्रमसिशतधारंव्वसोः पवित्रमसिसहस्त्रधारम्। देवस्त्वा
सविता पुनातु व्वसोः पवित्रेण शतधारेण सुप्वाकामधुक्षः ॥५॥
फलमंत्रः॥ ॥याः फलिनीर्य्या ऽअफला ऽअपुष्पायाश्च पु
ष्पिणीः बृहस्पतिप्प्रसूतास्तानो मुञ्चन्त्वꣳहसः ॥६॥ पं
चरत्नमंत्रः॥ परिवाजपतिः कविरग्निर्हव्यान्यक्रमीत्॥द
धद्रत्नानि दाशुषे ॥७॥ ॥हिरण्यमंत्रः॥ ॥हिरण्यगर्ब्भः स
मवर्त्तताग्रे भूतस्य जातः पतिरेक ऽआसीत्॥ सदाधारपृथि

वीन्द्यामुतेमाङ्कस्म्मैदेवायहविषाव्विधेम॥८॥ ॥गंधमंत्रः॥
त्वाङ्गन्धर्व्वाअखनँस्त्वामिन्द्रस्त्वाम्बृहस्स्पतिः॥त्वामोषधेसो
मोराजाव्विद्वान्न्यक्ष्म्मादमुच्च्यत॥९॥ ॥ओषधीमंत्रः॥ याऽ
ओषधीः सोमराज्ञीर्ब्बह्वीःशतविचक्षणाः॥तासामसित्वमुत्तमा
रङ्कामायशंहृदे॥१०॥ ॥मृत्तिकामंत्रः॥स्योनापृथिविनोभ
वानृक्षरानिवेशनि।यच्छानःशर्म्मसप्प्रथाः॥११॥ ॥दूर्वामं
त्रः॥ ॥काण्डात्काण्डात्प्ररोहन्तीपरुषःपरुषस्स्परि।।एवानो

दूर्वे प्रतनु सहस्रेण शतेन च ॥१२॥ ॥अश्वत्थपत्रमंत्रः॥ ॥अ-
श्वत्थे वो निषदनं पर्णे वो वसतिष्कृता । गोभाज इत्किलासथ
यत्सनवथ पूरुषम् ॥१३॥ ॥धान्यपूर्णमंत्रः॥ पूर्णा दर्वि परापत
सुपूर्णा पुनरापत ॥ वस्नेव विक्रीणावहा इषमूर्जꣳ शतक्र
तो ॥१४॥ ॥आवाहनमंत्रः॥ तत्त्वा यामि ब्रह्मणा वन्दमानस्त-
दाशास्ते यजमानो हविर्भिः ॥ अहेडमानो वरुणेह बोध्युरुश
ꣳस मा न आयुः प्रमोषीः ॥१५॥ अथ षोडशमातृकामंत्राः ॥

अथ गौरीमंत्रः॥ ॐ शर्म्मास्यवधूतᳪं रक्षोवधूताऽअरातयो
दित्यास्त्वगसि प्रतित्वादितिर्वेत्तु॥ अद्रिरसिवानस्पत्योग्रा
वासि पृथुबुध्नःᳪ प्रतित्वादित्यास्त्वग्वेत्तु॥१॥ अथ पद्मायै। ॐ
पावकानःᳪ सरस्वती वाजेभिर्व्वाजिनीवती॥ यज्ञं वष्टु धि
यावसुःᳪ॥२॥ अथ शच्यै॥ निवेशनःᳪ सङ्गमनो वसूनां विश्वा
रूपाभिचष्टे शचीभिःᳪ॥ देवऽइवसवितासत्यधर्म्मेन्द्रो नतस्थौ समरे
पथीनाम्॥३॥ अथ मेधायै॥ ॐ मेधाम्मे वरुणो ददातु मेधामग्नि

प्प्रजापतिः॥मेधामिन्द्रश्श्चवायुश्श्चमेधान्धातादंदातुमेस्स्वाहा
॥४॥अथसावित्र्यै॥ॐसवितात्वासवानां छंसुवतामग्निर्गृ
हपतीना छंसोमोव्वनस्प्पतीनाम्॥बृहस्प्पतिर्व्वाच्चऽइन्द्रोज्ज्यै
ष्ठ्यायरुद्र॒ःपशुभ्यो मित्रःसत्त्यो वरुणो धर्म्मपतीनाम्॥५॥
अथविजयायै॥ॐप्राणायस्स्वाहापानायस्स्वाहाव्यानाय
स्स्वाहा॥अम्बेऽअम्बिकेम्बालिकेनमानयतिकश्श्चन॥ससे
स्त्यश्श्वकःसुभद्रिकाङ्काम्पीलवासिनीम्॥६॥ ॥अथजयायै

ॐ बह्वीनाम्पिताबहुरस्यपुत्रश्चिश्चाकृणोतिसमनावगत्य
॥इषुधिः सङ्काः पृतनाश्चसर्वाः पृष्ठेनिनद्धोजयति प्रसूतः॥
॥७॥ अथदेवसेनायै॥ ॐ इन्द्रऽआसान्नेताबृहस्पतिर्दक्षि
णायज्ञः पुरऽएतुसोमः॥ देवसेनानामभिभञ्जतीनाञ्जयन्ती
नाम्मरुतोयन्त्वग्ग्रम्॥८॥ ॥अथस्वधायै॥ ॐ पितृभ्यः
स्वधायिभ्यः स्वधानमः पितामहेभ्यः स्वधायिभ्यः
स्वधानमः प्रपितामहेभ्यः स्वधायिभ्यः स्वधानमः॥

अक्षन्न्पितरोमीमदन्त पितरोतीतृपन्त पितरःपितरःशुन्धं
ध्वम्॥९॥स्वाहायै॥ॐस्वाहा प्राणेभ्यःसाधिपतिकेभ्यः
पृथिव्यैस्वाहाग्नयेस्स्वाहान्तरिक्षायस्स्वाहावायवेस्वाहा
।दिवेस्स्वाहासूर्य्यायस्स्वाहा॥१०॥ ॥मातरायै॥ॐअग्ना
धृष्टापुरस्तादग्नेराधिपत्त्यऽआयुर्म्मेदाःपुत्रवतीदक्षिणत
ऽइन्द्रस्स्याधिपत्येप्प्रजाम्मेदाः॥सुषदापश्चादेवस्स्यस
वितुराधिपत्त्येचक्षुर्म्मेदाऽआश्रुतिरुत्तरतोधातुराधिपत्त्ये

रायस्स्पोषम्मेदाः विधृतिरुपरिष्टाद्बृहस्पतेराधिपत्त्यऽओ
जोमेदाब्विश्श्वाऽअभ्योमानाष्ट्राऽभ्यस्प्पाहिमनोरश्श्वोसि॥११॥
लोकमातरायै॥ ॐ रयिश्श्चमेरायश्श्चमे पुष्टञ्चमेपुष्टिश्श्चमे
ब्विभुचमेप्प्रभुचमे पूर्णञ्चमे पूर्णतरञ्चमे कुयवञ्चमेक्षितञ्च
मेन्नञ्चमेक्षुच्चमे यज्ञेन कल्प्पन्ताम् ॥१२॥ ऋध्यै नमः॥ ॐ
भद्रङ्कर्णेभिः शृणुयामदेवा भद्रम्पश्येमाक्षभिर्य्यजत्राः॥
स्थिरैरङ्गैस्तुष्टुवाꣳसस्तनूभिर्व्यशेमहिदेवहितंयदायुः॥

॥१३॥पुष्ट्यैनमः॥ॐ अङ्गान्यात्मन्भिषजातदश्विनात्क्ष्मा
नमङ्गैःसमधात्सरस्वती॥इन्द्रस्यरूपꣳशतमानमायुश्च
न्द्रेणज्योतिरमृतन्दधानाः॥१४॥तुष्ट्यैनमः॥ॐ जातवेदसे
सुनवामसोममरातीयतोनिदहातिवेदः सनःपर्षदतिदुर्गाणि
विश्वानावेवसिन्धुंदुरितात्यग्निः॥१५॥अथ कुलदेवता
यै॥ॐ तत्सवितुःपात्॥ॐ वसोःपवित्रमसिशतधारम्व
सोःपवित्रमसिसहस्रधारम्॥देवस्त्वासवितापुनातुवसोः

पवित्रेण शतधारेण सुप्वा कामंधुक्षः ॥१॥ अथ नवग्रहमंत्रः॥
आकृष्णेन रजसा वर्त्तमानो निवेशयन्नमृतम्मर्त्यञ्च। हिरण्य
येन सविता रथेना देवो याति भुवनानि पश्यन् ॥१॥ इमन्देवा ऽ
असपत्नꣳ सुवद्ध्वं महते क्षत्त्राय महते ज्ज्यैष्ठ्याय महते जानरा
ज्ज्यायेन्द्रस्स्येन्द्रियाय ॥ इममुष्य्यं पुत्रमस्स्यै व्विश ऽ एष
वोमी राजा सामोस्स्माकं ब्राह्मणानाꣳ राजा ॥२॥ अग्नि
र्म्मूर्द्धा दिवः ककुत्पतिः पृथिव्या ऽ अयम्॥ अपाꣳ रेताꣳसि

सिजिन्वति॥३॥ॐ उद्बुध्यस्वाग्ने प्रतिजागृहित्वमिष्टापूर्ते सं
सर्ठ॰सृजेथामयञ्च॥अस्मिन्त्सधस्थेऽअध्युत्तरस्मिन्विे
श्वेदेवायजमानश्चसीदत॥४॥बृहस्पतेऽअतियदर्योऽअ
र्हाद्युमद्विभातिक्रतुमज्जनेषु॥यद्दीदयच्छवसऽऋतप्रजात
तदस्मासुद्रविणन्धेहिचित्रम्॥५॥अन्नात्परिस्रुतोरस
म्ब्रह्मणाव्यपिबत्क्षत्रम्पयःसोमम्प्रजापतिः॥ऋतेनसत्य
मिन्द्रियंविपानर्ठ॰शुक्रमन्धसऽइन्द्रस्येन्द्रियमिदम्पयो

मृतम्मधु॥६॥ शन्नोदेवीरभिष्टय ऽआपो भवन्तुपीतये॥शय्यो
रभिस्त्रवन्तुनः॥७॥कयानश्चित्र ऽआभुवदूतीसदावृधः
सखा॥कयाशचिष्ठयावृता॥८॥केतुङ्कृण्वन्न्केतवे पेशोम
र्य्याऽअपेशसे॥समुषद्भिरजायथाः॥९॥ अथनवग्रहाधि
देवतामंत्राः॥त्र्यंम्बकंय्यजामहेसुगन्धिम्पुष्टिवर्द्धनम्॥उर्वा
रुकमिवबन्धनान्न्मृत्योर्म्मुक्षीयमामृतात्॥१॥श्रीश्चतेल
क्ष्मीश्चपत्न्यावहोरात्रेपार्श्वेनक्षत्राणिरूपमश्विनौव्यात्तम्

दिह॥१॥ अप्स्वग्ने सधिष्टव सौषधीरनु रुध्यसे॥ गर्भे सञ्जायसे
पुनः॥२॥ स्योना पृथिवि नो भवानृक्षरा निवेशनी॥ यच्छा नः श
र्म सप्रथाः॥३॥ इदं विष्णुर्वि चक्रमे त्रेधा निदधे पदम्॥ समू
ढमस्य पाꣳ सुरे स्वाहा॥४॥ त्रातार मिन्द्रम वितार मिन्द्रꣳ हवे हवे
सुहवꣳ शूर मिन्द्रम्॥ ह्वयामि शक्रम्पुरुहूत मिन्द्रꣳ स्वस्ति नो मघ
वा धात्विन्द्रः॥५॥ अदित्यै रास्नासीन्द्राण्या उष्णीषः॥ पूषासि
घर्माय दीष्व॥६॥ प्रजापते न त्वदेतान्यन्यो विश्वा रूपाणि

परिताबभूव॥यत्कामास्तेजुहुमस्तन्नोऽअस्त्वयममुष्ष्यपितासा
वस्स्यपिताव्वयथ्स्यामपतयोरयीणाथ्स्वाहा॥७॥नमोस्तुसर्प्पे
ब्भ्योयेकेचपृथिवीमनु॥येऽअन्तरिक्षेयेदिवितेब्भ्यः सर्प्पेब्भ्यो
नमः॥८॥ब्रह्मयज्ञानम्प्रथमम्पुरस्ताद्विसीमतःसुरुचोवेन
ऽआवः॥सुबुद्ध्न्याऽउपमाऽअस्स्यविष्ठाःसतश्चयोनिमसतश्च
श्चविवः॥९॥अथगणेशादिपंचदेवतामंत्राः॥गणानान्त्वा
गणपतिꣳहवामहेप्रियाणान्त्वाप्रियपतिꣳहवामहेनिधी

नान्त्वांनिधिपतिँ॑हवामहेवसोमम॥ आहमजानिगर्भधमा
त्वमजासिगर्भधम्॥१॥ अम्बेऽअम्बिकेम्बालिकेनमांनयतिक
श्चन॥ससस्त्यश्वकःसुभद्रिकाङ्काम्पीलवासिनीम्॥२॥ गा
तौवामनौवागन्धर्वाःसप्तविँ॑शतिः॥तेऽअग्रेश्वमायुञ्जँस्ते
ऽअस्मिन्जवमादधुः॥३॥ घृतङ्घृतपावानःपिबतव्वसांव्वसा
पावानःपिबतान्तरिक्षस्स्यहविरसिस्वाहा॥४॥ दिशःप्प्रदि
शऽआदिशोव्विदिशऽउद्दिशोदिग्भ्यःस्वाहा॥५॥ यावाङ्क

शामधुमत्यश्विनासूनृतावती॥ तयायज्ञम्मिमिक्षताम्॥५॥अथ दिक्पालमंत्राः॥ ॥त्रातारमिन्द्रमवितारमिन्द्र ऽं हवेहवे सुहव ऽं शूरमिन्द्रम्॥ह्वयामिशक्रम्पुरुहूतमिन्द्रं स्वस्तिनोमघवा धात्विन्द्रः॥१॥ इतिअग्निमंत्रः॥ त्वन्नोऽअग्नेवरुणस्यविद्वान्देवस्यहेडोऽअवयासिसीष्ठाः॥यजिष्ठोवन्हितमःशोशुचानोविश्वाद्वेषां सिप्रमुमुग्ध्यस्मत्॥ यममंत्रः॥ असियमोऽअस्यादित्त्योऽअर्वन्नसित्रितोगुह्येनव्रतेन॥असिसो

मैनसमयाविपृक्तऽआहुस्तेत्रीणि दिविबन्धनानि॥३॥नैरृत
मंत्रः॥असुन्वन्तमयजमानमिच्छस्तेनस्येत्यामन्विहितस्के
रस्स्य॥अन्यमस्मदिच्छसातऽइत्यानमोदेविनिरृतेतुभ्य
मस्तु॥४॥वरुणमंत्रः॥इमम्मेवरुणश्रुधीहवमद्याचमृडय॥
त्वामवस्युराचके॥५॥आनोनियुद्भिः शतिनीभिरध्वरꣳस
हस्त्रिणीभिरुपयाहियज्ञम्॥वायोऽअस्मिन्त्सवनेमादयस्व
यूयम्पातुस्वस्तिभिः सदानः॥६॥कुबेरमंत्रः॥वयꣳसोमव्रते

तव मनेस्तनूषु विभ्रंतः प्रजावन्तः सचेमहि ॥७॥ शिवमंत्रः ॥ तमी
शानञ्जगतस्तस्थुषस्पतिंन्धियञ्जिन्न्वमवसेहूमहे वयम् ॥ पूषा
नोयथावेदसामसंदूधेरक्षिता पायुरदब्धः स्वस्तये ॥८॥ ब्रह्ममंत्रः
॥ ब्रह्मयज्ञानम्प्रथमम्पुरस्ताद्विसीमतः सुरुचोवेनऽआवः ॥ सु
बुध्न्याऽउपमाऽअस्य विष्ठाः सतश्चयोनिमसतश्चविवः ॥
॥९॥ शेषमंत्रः ॥ स्योनापृथिविनो भवानृक्षराॆ निवेशनि ॥ यच्छा
नः शर्म्मसप्रथाः ॥१०॥ अथ क्षेत्रपालमंत्रः ॥ नहिस्पशमविद

न्नन्यमस्म्माद्वैश्वानरात्पुरऽएतारमग्ग्नेः॥एमेनमवृधन्नमृताऽ
अमर्त्यंवैश्वानरङ्क्षैत्रजित्यायदेवाः॥१॥अथअग्नेर्ध्यानमंत्रः
॥चत्वारिशृङ्गात्त्रयोऽअस्यपादाद्द्वेशीर्षेसप्तहस्तासोऽअस्य
॥त्रिधाबद्धोवृषभोरोरवीतिमहोदेवोमर्त्त्याँ२॥ऽआविवेश॥१॥अ
थाष्टाहुतिमंत्राः॥त्वन्नोऽअग्ग्नेवरुणस्यविद्वान्देवस्यहेडोऽअ-
वयासिसीष्ठाः॥यजिष्ठोवह्नितमःशोशुचानोविश्वाद्वेषाᳬंसि
प्रमुमुग्ध्यस्म्मत्॥२॥सत्वन्नोऽअग्ग्नेवमोभवोतीनेदिष्ठोऽअस्स्या

ऽउषसो व्युष्टौ ॥ अवंयस्त्वनोवरुणं रराणोवीहिमृडीकं सुहवोनऽ
एधि ॥ २ ॥ इमम्मेवरुणश्रुधीहवमद्याचमृडय ॥ त्वामवस्युराचके ॥
॥ ३ ॥ तत्त्वायामिब्रह्मणावन्दमानस्तदाशास्तेयजमानोहविर्भिः
॥ अहेडमानोवरुणेहबोध्युरुशंस मानऽआयुःप्रमोषीः ॥ ४ ॥ येते
शतम्वरुणयेसहस्रंयज्ञियाःपाशावितता महान्तः ॥ तेभिर्नोऽअद्यस
वितोतविष्णुर्विश्वेमुञ्चन्तुमरुतःस्वर्काः ॥ ५ ॥ अयाश्चाग्नेस्यन
भिशस्तिपाश्चसत्वमित्वमयाऽअसि अयानोयज्ञंवहास्ययानोधेहि

भेषजᳬस्वाहा॥६॥उदुत्तमम्वरुणपाशमस्म्मदवाधमंविमध्यमᳬश्रथाय॥अथावयमादित्यव्रतेतवानागसोऽअदितयेस्स्याम॥७॥
भवतन्नःसमनसौसचेतसावरेपसौ॥मायज्ञᳬहिᳬसिष्टम्मायज्ञपतिञ्जातवेदसौशिवौभवतमद्यनः॥८॥अथबर्हिहोममंत्रः॥देवागातुविदोगातुंवित्वागातुमित॥मनसस्पतऽइमन्देवयज्ञᳬस्वाहावातेधाः॥९॥अथपूर्णाहुतिमंत्राः॥मूर्द्धानन्दिवोऽअरतिम्पृथिव्यावैश्वानरमृतऽआजातमग्निम्॥कविᳬसम्म्राजमतिथिञ्ज

नानामासन्ना पात्रं ञ्ञनयन्तदेवाः॥१॥वसोःपवित्रमसिशतधा
रम्वसोःपवित्रमसिसहस्रंधारम्॥देवस्त्वासवितापुनातुवसोःप
वित्रेणशतधारेणसुप्वा॥कामधुक्षः॥२॥पूर्णादर्विपरापतस्तु
पूर्णापुनरापत॥वस्नेवविक्रीणावहाऽइषमूर्जंशतक्रतो पु
नेस्त्वादित्यारुद्रावसवःसमिन्धतांपुनर्ब्रह्माणोवसुनीथय
ज्ञैः॥घृतेनत्वन्तन्वंवर्द्धयस्वसत्याःसन्तुयजमानस्यकामाः
॥४॥अथभस्मधारणमंत्रः॥त्र्यायुषञ्जमदग्नेःकश्यपस्यत्र्या

युषम्॥यद्देवेषु त्र्यायुषंतन्नोऽअस्तु त्र्यायुषम्॥१॥अथाभिषेक
मंत्रः॥समुद्रज्येष्ठाः सलिलस्यमध्यात्पुनानायंत्यनिविशमानाः॥
इंद्रोयावज्रीवृषभोरराद ता॥आपोदेवीरिहमामवन्तु॥१॥आऽ
आपोदिव्याऽउतवास्रवन्तिखनित्रिमा ऽउतवायाःस्वयंजाः॥
समुद्रार्थायाःशुचयःपावकास्ताऽआपोदेवीरिहमामवन्तु॥२॥
यासांराजावरुणोयातिमध्येसत्यानृतेअवपश्यंजनानां॥मधुश्चु
तःशुचयोयाःपावकास्ताआपोदेवीरिहमामवन्तु॥यासुराजाव

रुणोयासुसोमो विश्वेदेवा या।सूर्जंमदन्ति॥वैश्वानरोयास्वग्निः
प्रविष्टुस्ताऽआपोदेवी रिहमामवन्तु॥३॥ॐ भूः पुनातु ॐ भु
वः पुनातु ॐ स्वः पुनातु ॐ महः पुनातु ॐ जनः पुनातु ॐ तपः
पुनातु ॐ सत्यं पुनातु ॐ तत्सवितु.यात्॥सर्वपुनातु॥४॥ॐ आपो
हिष्ठामयोभुवस्तानऽऊर्जेदधातन॥महेरणायचक्षसे॥५॥योवः शि
वतमोरसस्तस्यभाजयतेहनः॥उशतीरिवमातरः॥६॥तस्माऽअ
रङ्गमामवोयस्यक्षयायजिन्वथ॥आपोजनयथाचनः॥७॥पुनन्तु

मापितरः सोम्यासः पुनन्तुमा पितामहाः पवित्रेणशतायुषा॥पुन
न्तुमा पितामहाः पुनन्तु प्रपितामहाः॥पवित्रेणशतायुषा विश्व
मायुर्व्यश्नवै॥८॥अग्नऽआयूंषिपवसऽआसुवोर्ज्जमिषञ्चनः
आरेबाधस्वदुच्छुनाम्॥९॥पुनन्तुमादेवजनाः पुनन्तु मनसाधियः
॥पुनन्तुविश्वा भूतानिजातवेदः पुनीहिमा॥१०॥पवित्रेणपुनीहिमा
शुक्रेणदेवदीद्यत्॥अग्नेक्रत्वाक्रतूँ॥रनु॥११॥यत्ते पवित्रमर्चि
ष्यग्ने विततमन्तरा॥ब्रह्मतेनपुनातुमा॥१२॥पवमानः सोऽअद्य

नेःपुवित्रेणविचर्षणिः॥यःपोतासपुनातुमा॥१३॥उभाभ्यांदेव
सवितःपुवित्रेणसवेनच। मांपुनीहिविश्वतः॥१४॥वैश्वदेवीपु
नतीदेव्यागाद्यस्यामिमाबह्व्यस्तन्वोवीतपृष्ठाः॥तयामदन्तःस
धमादेषुवयस्स्यामपतयोरयीणाम्॥१५॥चित्पतिर्म्मापुनातु
वाक्पतिर्म्मापुनातुदेवोमासवितापुनात्वच्छिद्रेणपवित्रेणसूर्य्य
स्स्यरश्मिभिः॥तस्स्यतेपवित्रपतेपवित्रपूतस्स्ययत्कामःपुनेत
च्छकेयम्॥१६॥याऽओषधीःसोमराज्ञीर्बह्वीःशतविचक्षणाः॥ता

सामसित्वमुत्तमारङ्कामोयज्ञाऽहृदे॥१७॥याऽओषधीःसोमरा
ज्ञीर्विष्ठिताःपृथिवीमनु॥बृहस्पतिप्रसूताऽअस्यैसन्दत्तवी
र्य्यम्॥१८॥वयऽंसोमव्रतेतवमनस्तनूषुबिभ्रतः॥प्रजावन्तः
सचेमहि॥१९॥त्रातारमिन्द्रमवितारमिन्द्रऽंहवेहवेसुहवऽंशूरमि
न्द्रम्॥ह्वयामिशक्रम्पुरुहूतमिन्द्रऽंस्वस्तिनोमघवाधात्विन्द्रः
॥२०॥देवस्यत्वासवितुःप्रसवेश्विनोर्बाहुभ्याम्पूष्णोहस्ता
भ्याम्॥सरस्वत्यैवाचोयन्तुर्यन्त्रियेदधामिबृहस्पतेष्ट्वासा

म्म्राज्ज्येनाभिषिंञ्चाम्यसौ॥२१॥देवस्स्यत्वासवितुःप्प्रसवेऽश्श्वि
नोर्ब्बाहुभ्यांम्पूष्णोहस्ताभ्याम्॥सरस्स्वत्यैवाचोयन्तुर्य्यन्त्रेणा
ग्नेःसाम्म्राज्ज्येनाभिषिंञ्चामि॥२२॥देवस्स्यत्वासवितुःप्प्रसवे
ऽश्श्विनोर्ब्बाहुभ्यांम्पूष्णोहस्ताभ्याम्॥अश्श्विनोर्भैषज्ज्येनतेजसे
ब्ब्रह्मवर्च्चसायाभिषिंञ्चामि॥सरस्स्वत्यैभैषज्ज्येनवीर्य्यायान्ना
द्यायाभिषिंञ्चामीन्द्रस्स्येन्द्रियेणबलायश्श्रियैयशसेभिषिंञ्चामि
॥२३॥कोसिकतमोसिकस्म्मैत्त्वाकायत्त्वा॥सुश्लोकसुमङ्गलस

त्येराजन्॥२४॥शिरोमेश्रीर्य्यशोमुखन्त्विषिः॥केशाश्चश्म
श्रूणि राजोमेप्राणोऽअमृतꣳसम्म्राट्चक्षुर्विराट्श्रोत्रम्॥२५
॥जिह्वामेभद्रंवाङ्महोमनोमन्युःस्वराड्भामः॥मोदाःप्रमोदाऽ
अङ्गुलीरङ्गानिमित्रम्मेसहः॥२६॥बाहूमेबलमिन्द्रियꣳहस्तौमे
कर्म्मवीर्य्यम्॥आत्माक्षत्रमुरोमम॥२७॥पृष्ठीर्म्मेराष्ट्रमुदरमꣳ
सौग्रीवाश्चश्रोणी॥ऊरूऽअरत्नीजानुनीविशोमेङ्गानिसर्व्वतः॥
॥२८॥नाभिर्म्मेचित्तम्विज्ञानम्पायुर्म्मेपचितिर्भसत्॥आनन्द

नन्दावांडोमेभगः सौभाग्यम्यसंः जङ्घाभ्यांपद्भ्यान्धर्म्मोस्मि
विशिराजाप्रतिष्ठितः॥२९॥प्रतिक्षत्रेप्रतितिष्ठामिराष्ट्रेप्रत्य
श्वेषुप्रतितिष्ठामिगोषु॥प्रत्यङ्गेषुप्रतितिष्ठाम्यात्मन्प्रतिप्रा
णेषुप्रतिष्ठामिपुष्टेप्रतिद्यावापृथिव्योःप्रतितिष्ठामियज्ञे॥३०
॥द्यौःशान्तिरन्तरिक्षथंशान्तिःपृथिवीशान्तिरापःशान्तिरोष
धयःशान्तिः॥वनस्पतयःशान्तिर्विश्वेदेवाःशान्तिर्ब्रह्मशा
न्तिःसर्वथंशान्तिःशान्तिरेवशान्तिःसामाशान्तिरेधि॥३१॥

अथदेवतामंत्रः॥नमः शम्भवायेच मयो भवायेच नमः शङ्करायेच मयस्करायेचनमः शिवायेच शिवतरायच॥१॥ विष्णुमन्त्रः॥ इदंविष्णुर्विचंक्रमेत्रेधानिदधे पदम्॥समूढमस्स्यपांसुरेस्स्वाहा॥२॥ देवीमंत्रः॥ अम्बेऽअम्बिकेम्बालिकेनमानयतिकश्चन॥ससस्त्यश्वकःसुभद्रिकाङ्काम्पीलवासिनीम्॥३॥गणेशमंत्रः॥गणानान्त्वागणपतिंहवामहे प्रियाणान्त्वाप्रियपतिंहवामहे निधीनान्त्वानिधिपतिंहवामहेवसोमम॥ आहमजानिग

धमात्वमेजासिगर्ब्भधं॥ सूर्य्यमंत्रः॥ आकृष्णेनरजसावर्तमानो
निवेशयन्नमृतम्मर्त्यंञ्च॥ हिरण्ययेनसवितारथेनादेवोयातिभु
वनानिपश्यन्॥५॥ त्र्यंबकमंत्रः॥ त्र्यंबकञ्जजामहेसुगन्धिम्पुष्टि
वर्द्धनम्॥उर्वारुकमिवबन्धनान्मृत्योर्मुक्षीयमामृतात्॥६॥ब्र
ह्ममंत्रः॥ब्रह्मयज्ञानम्प्रथमम्पुरस्ताद्विसीमतः सुरुचोवेनऽआ
वः॥सबुद्ध्याऽउपमाऽअस्यविष्ठाः सतश्चयोनिमसतश्चविवः
॥७॥स्कन्दमंत्रः॥यदक्रन्दः प्प्रथमंजायमानऽउद्यन्त्समुद्रादुत

वापुरीषात्॥श्येनस्त्वं पक्ष्याहरिणस्त्वंबाहू॒ऽउपेस्तुत्यम्महिजा
तन्तेऽअर्घेन॥८॥सर्प्पमंत्रः॥नमोस्तुसर्प्पेभ्यो येकेच पृथिवीमनु
॥येऽअन्तरिक्षेयेदिवितेभ्यः सर्प्पेभ्योनमः॥९॥हनुमानमंत्रः
॥अस्मेरुद्रामेहनापर्वतासोवृत्रहत्येभरहूतौसजोषाः॥यःशंस
तेस्तुवतेधायिपज्र॒ऽइन्द्रज्येष्ठाऽअस्माँ॥ऽअवंतुदेवाः
॥१०॥सप्तऋषिमंत्रः॥सप्तऽऋषयःप्रतिहिताःशरीरेसप्तर
क्षन्तिसदमप्रमादम्॥सप्तापःस्वपतोलोकमीयुस्तत्रजागृ

तोऽअस्वप्नजौसत्रसदौचदेवौ ॥११॥ ध्रुवमंत्रः ॥ ध्रुवक्षितिर्ध्रुव
योनिर्ध्रुवासिध्रुवंयोनिमासीदसाधुया ॥ उख्यस्य केतुम्प्रथ
मंजुषाणाश्विनाध्वर्य्यूसादयतामिहत्वा ॥१२॥ भूतमंत्रः ॥ भूता
येत्वानारातयेस्वरभिविख्यैषन्दृंहन्तान्दुर्य्याः पृथिव्यामुर्व्व
न्तरिक्षमन्वेमि पृथिव्यास्त्वानाभौ सादयाम्म्यदित्याऽउपस्थे
ग्नेहव्यंरक्ष ॥१३॥ विश्वकर्मा मंत्रः ॥ विश्वकर्म्मन्हविषावर्द्धनेन
त्रातारमिन्द्रमकृणोरवध्यम् ॥ तस्मैविशःसमनमन्तपूर्वीरय

मुग्रोधिहव्यो यथासत्॥१४॥ अगस्तिमंत्रः॥ कुम्भोवेनिष्टुर्ज्जनि
ताशचीभिर्य्यस्मिन्नग्रेयोन्याङ्गर्भ्यो ऽअन्तः॥ प्लाशिर्व्यक्तः
शतधारऽउत्सोदुहेनकुम्भीस्वधाम्पितृभ्यः॥१५॥ कालिमंत्रः॥
कन्न्याऽइववहतुमेतवाऽउऽअञ्ज्यञ्जानाऽअभिचाकशीमि॥यत्र
सोमःसूयतेयत्रयज्ञो घृतस्यधाराऽअभितत्पवन्ते॥१६॥ लक्ष्मी
मंत्रः॥ श्रीश्चतेलक्ष्मीश्चपत्न्यावहोरात्रेपार्श्वेनक्षत्राणिरूपमश्वि
नौव्यात्तम्॥इष्णन्निषाणामुम्मऽइषाणसर्वलोकम्मऽइषाण॥१७॥

सरस्वतीमंत्रः॥ पञ्चनद्यः सरस्वतीमपियन्तिसस्रोतसः सरस्व
तीतुपञ्चधासोदेशेभवत्सरित्॥१८॥ पृथ्वीमंत्रः॥स्योनापृथिविनो
भवानृक्षरानिवेशनी॥यच्छानः शर्म्मसप्रथाः॥१९॥ आपमंत्रः॥
अप्स्वग्ग्नेसधिष्टवसौषधीरनुरुध्यसे॥गर्ब्भेसञ्जायसेपुनः॥२०
॥तेजमंत्रः॥अग्निन्दूतम्पुरोदधेहव्यवाहमुपब्रुवे॥देवाँ२॥ऽआसा
दयादिह॥२१॥वायुमन्त्रः॥वातोवामनोवागन्धर्वाः सप्तविꣳश
तिः॥तेऽअग्ग्रेश्वमयुञ्जँस्तेऽअस्मिञ्जवमादधुः॥२२॥आका-

शा मंत्रः॥ या वाङ्कशा मधुमत्यश्विना सूनृतावती॥ तया यज्ञम्मिमिक्षताम्॥२३॥ देवतापत्नीमंत्रः॥ तम्पत्नीभिरनुगच्छेम देवाः पुत्रैर्भ्रातृभिरुत वा हिरण्यैः॥ नाकङ्गृभ्णानाः सुकृतस्य लोके तृतीये पृष्ठेऽधिरोचने दिवः॥२४॥ ऋग्वेदमंत्रः॥ अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम् होतारं रत्नधातमम्॥२५॥ यजुर्वेदमंत्रः॥ इषे त्वोर्ज्जे त्वा वायवस्थ देवो वः सविता प्रार्प्पयतु श्रेष्ठतमाय कर्म्मणऽआप्यायध्वमघ्न्याऽइन्द्राय भागम्प्रजावतीरनमीवाऽअयक्ष्मा मा

वस्तेनऽईशतमाघशं थंसोहुवाऽअस्मिन्नोपर्तौस्यातवद्वीध्यै
जेमानस्स्यपुथून्मोहि॥२६॥ सामवेदमंत्रः॥अग्नुऽआयाहिवीतये
गृणानोहव्यदातये निहोतोसत्सिबर्हिषि॥२७॥ अथर्वणमंत्रः॥श
न्नोदेवीरभिष्टयऽआपोभवन्तुपीतये शंयोरभिस्त्रवन्तुनः॥२८॥
वास्तुमंत्रः॥वास्तोष्पतेप्रतिजानीह्यस्मान्स्वावेशोऽअनमीवोभवा
नः यत्वेमहेप्रतितन्नोजुषस्वशन्नोभवद्विपदेशंचतुष्पदे॥२९॥
समुद्रमंत्रः॥समुद्रोसिनभस्वानार्द्रदानुःशम्भूर्म्मयोभूरभिमा

वाहिस्स्वाहा॥ मारुतोसिमरुताङ्गणः शम्भूर्म्मयोभूरभिमाद्वाहि
स्वाहा॥ वस्यूरसिदुवस्वाञ्छम्भूर्म्मयोभूरभिमाद्याहिस्वाहा
॥३०॥ पर्वतमंत्रः॥ प्रपर्वतस्यवृषभस्यपृष्ठान्नावश्चरन्तिस्व
सिचऽइयानाः। ताऽआववृत्रन्नधरागुदक्ताऽअहिम्बुध्न्यमनुरीय
माणाः॥ विष्णोर्विक्रमणमसिविष्णोर्विक्रान्तमसिविष्णोःक्र
न्तमसि॥३१॥ संवत्सरमंत्रः॥ संवत्सरोसिपरिवत्सरोसीदावत्सरो
सीद्वत्सरोसिवत्सरोसि॥ उषसस्तेकल्प्यन्तामहोरात्रास्तेकल्प्यन्ता

मर्द्धमासास्तेकल्प्यन्ताम्मासास्ते कल्प्यन्तामृतवस्ते कल्प्यन्ता ᳪं सं
वत्सरस्ते कल्प्यताम्॥३२॥ ऋतुमंत्रः॥ वसन्तेनऽऋतुनादेवावसव
स्त्रिवृता स्तुताः रथन्तरेण तेजसाहविरिन्द्रे वयोदधुः॥३३॥ ग्री
ष्मेणऽऋतुनादेवारुद्राः पञ्चदशेस्तुताः बृहतायशसाबलᳪंहवि
रिन्द्रेवयोदधुः॥३४॥ वर्षाभिर्ऋतुनादित्यास्तोमे सप्तदशेस्तुताः
वैरूपेणविशौजसाहविरिन्द्रेवयोदधुः॥३५॥ शारदेनऽऋतुनादेवाऽ
एकविᳪंशऽऋभवस्तुताः वैराजेन श्रियाश्रियᳪंहविरिन्द्रेवयोव

योदधुः ॥३६॥ हेमन्तेनऽऋतुनादेवास्त्रिणवे मरुतंस्तुताः ॥ बलेनशक्क
रीःसहोहविरिन्द्रेवयोदधुः ॥३७॥ शैशिरेणऽऋतुनादेवास्त्रयस्त्रिꣳ
शेमृतास्तुताः ॥ सत्येनरेवतीःक्षत्रꣳहविरिन्द्रेवयोदधुः ॥३८॥ मासु
मंत्रः ॥ अर्द्धमासाःपरूꣳषितेमासाऽआच्छ्यंतुशम्म्यंतः ॥ अहोरा
त्राणिमरुतोविलिष्टꣳसूदयन्तुते ॥३९॥ पक्षमंत्रः ॥ इमौतेपक्षावज
रौपतत्रिणौयाभ्याꣳरक्षाꣳस्यपहꣳस्यग्ने ॥ ताभ्यांम्पतेम
सुकृतामुलोकंय्यत्रऽऋषयोजग्मुःप्रथमजाःपुराणाः ॥४०॥ शु

कृपक्षमन्त्रः॥ अग्नेः पक्षतिर्वायोर्न्निपक्षतिरिन्द्रस्य तृतीया सोमस्य
चतुर्थ्यदित्यै पंचमीन्द्राण्यै षष्ठी मरुताᳬं सप्तमी बृहस्पतेरष्टम्यर्य्य
म्णो नवमी धातुर्द्दशमीन्द्रस्यैकादशी वरुणस्य द्वादशी यमस्य त्रयो
दशी॥४१॥ कृस पक्षतिथि मंत्रः॥ इन्द्राग्न्योः पक्षतिः सरस्वत्यै निप
क्षतिर्म्मित्रस्य तृतीयापाञ्चतुर्थी निर्ऋत्यै पञ्चम्यग्नीषोमयोः षष्ठी
सर्प्पाणाᳬं सप्तमी विष्णोरष्टमी पूष्णो नवमी त्वष्टुर्द्दशमीन्द्रस्यैका
दशी वरुणस्य द्वादशी यम्म्यै त्रयोदशी द्यावापृथिव्योर्द्दक्षिणम्पा

श्वंविश्वेषान्देवानामुत्तरम्॥४२॥ दिनमंत्रः॥अन्हे पारावतानालभते
रात्र्यै सीचापूरहोरात्रयोः सन्धिभ्योजतूम्मासेभ्योदात्योहान्त्सं
वत्सरायेमहतः सुपर्णान्॥४३॥ अथनक्षत्रमंत्राः॥ तत्रअश्विनी
मंत्रः॥ यावाङ्कशामधुमत्याश्विनासुनृतावती॥ तयायज्ञम्मिमिक्ष
ताम्॥ भरणीमंत्रः॥ यमायत्वामखायत्वासूर्य्यस्यत्वातपसे॥
देवस्त्वासविताम‍ध्वानक्तुपृथिव्यासथंस्पृशस्याहि॥ अर्चिरसिशो
चिरसितपोसि॥ ॥कृत्तिकामंत्रः॥ अग्निन्दूतम्पुरोदधेहव्यवाह

मुपंह्वये॥देवाँ२॥ऽआसादयादिह॥३॥रोहिणीमंत्रः॥प्रजापतेनत्वदेता
न्यन्यो विश्वारूपाणिपरिताबभूव॥यत्कामास्तेजुहुमस्तन्नोऽअस्तुवय
मस्याम्पतयोरयीणाथंस्वाहा॥मृग
शिरामंत्रः॥सोमोधेनुथंसोमोऽअर्वन्तमाशुथंसोमोवीरङ्कर्मण्यन्द
दाति॥सादन्यंविदथ्यथंसभेयम्पितृश्रवणंयोददाशदस्मै॥५॥आ
र्द्रामंत्रः॥इमारुद्रायतवसेकपर्दिनेक्षयद्वीरायप्रभरामहेमतीः॥यथाश
मसद्द्विपदेचतुष्पदेविश्वम्पुष्टङ्ग्रामेऽअस्मिन्ननातुरम्॥६॥पुनर्वसुमंत्रः॥

मंत्र अदितिर्द्यौरदितिरन्तरिक्षमदितिर्म्मातासपितासपुत्रः॥विश्वेदेवाऽअदि सं
३७ तिःपञ्चजनाऽअदितिर्ज्जातमदितिर्ज्जनित्वम्॥७॥पुष्यमंत्रः॥बृहस्पते
ऽअतियदर्य्योऽअर्हाद्द्युमद्विभातिक्रतुमज्जनेषु॥यद्दीदयच्छवसऽऋतप्र
जाततदस्मासुद्रविणन्धेहिचित्रम्॥८॥अश्लेषामंत्रः॥नमोस्तुसर्प्पेभ्यो
येकेचपृथिवीमनु॥येऽअन्तरिक्षेयेदिवितेभ्यःसर्प्पेभ्योनमः॥९॥मघा
मंत्रः॥उदीरतामवरऽउत्परासऽउन्मध्यमाःपितरःसोम्म्यासः॥असुंय ३७
ऽईयुरवृकाऽऋतज्ञास्तेनोवन्तुपितरोहवेषु॥१०॥पूर्वामंत्रः॥भगप्प्रणेत

भगसत्यराधो भगेमान्धियमुदवाददन्नः॥भगप्रनोजनयगोभिरश्वैर्भ
गप्रनृभिर्न्नृवन्तःस्याम॥११॥उत्तरामंत्रः॥अर्य्यमणम्बृहस्पतिमिन्द्रन्दा
नायचोदय॥वाचंविष्णुꣳसरस्वतीꣳसवितारञ्चवाजिनꣳस्वाहा॥१२॥
हस्तमंत्रः॥उदुत्यञ्जातवेदसन्देवंवहन्तिकेतवः॥दृशेविश्वायसूर्य्यम्॥१३॥चि
त्रामंत्रः॥त्वष्टातुरीपोऽअद्भुतऽइन्द्राग्नीपुष्टिवर्द्धना॥द्विपदाछन्दऽइन्द्रिय
मुक्षागौर्न्नवयोदधुः॥१४॥स्वातिमंत्रः॥वायुरग्रेगायज्ञप्रीःसाकङ्गन्म
नसायज्ञं॥शिवोनियुद्भिःशिवाभिः॥विशाखामंत्रः॥इन्द्राग्नीआगतꣳ

सुतङ्गीभिर्न्नं भोधवैरेण्यम्॥ अस्य पातन्धियेषिता॥१६॥ अनुराधामंत्रः॥ नमो
मित्रस्य वरुणस्य चक्षसे महोदेवाय तदृतथंसपर्य्यत॥ दूरेदृशेदेवजाताय
केतवे दिवस्पुत्राय सूर्य्याय शथंसत॥१७॥ ज्येष्ठामंत्रः॥ त्रातारमिन्द्रमवितार
मिन्द्रथंहवेहवे सुहवथंशूरमिन्द्रम्॥ कयामिशक्रं स्पुरुहूतमिन्द्रथंस्व
स्ति नो मघवा धात्विन्द्रः॥१८॥ मूलामंत्रः॥ माताचते पिताचते ग्र्रं वृक्ष
स्य रोहतः॥ प्रतिलामीतिते पिता गभे मुष्टिमंतथंसयत्॥१९॥ पूर्वाषाढा
मंत्रः॥ अपोधमदभिशस्तीरशस्तिहात्येन्द्रो द्युम्न्याभवत्॥ देवास्त्ऽइन्द्र

संकव्याप्नेये मिरेव्हहेइन्नो मरुद्गण॥२०॥उत्तराषाढामंत्रः॥विश्वेदेवासऽआ
गतश्शृणुतामऽइमथंहवम्॥एदम्बर्हिर्न्निषीदत॥२१॥श्रवणमंत्रः॥विष्णोर
राटमसिविष्णोः श्नप्त्रेस्थो विष्णोः स्स्यूरसिविष्णोर्द्ध्रुवोसि॥वैष्णवमसि
विष्णवेत्वा॥२२॥धनिष्ठामंत्रः॥वसोः पवित्रमसिद्यौरसिपृथिव्यसिमातरिश्वे
नो घर्म्मोसिविश्वधाऽअसि॥परमेण धाम्नाद्दथंहस्स्वमाह्वार्म्मातेयज्ञ
पतिर्ह्वार्षीत॥२३॥शततारकामंत्रः॥वरुणस्स्योत्तम्भनमसिवरुणस्य
स्कम्भसर्ज्जनीस्थोवरुणस्स्यऽऋतसदन्न्यसिवरुणस्स्यऋतसदनम

सिद्वरुणस्यऽऋतसदनमासीद॥२४॥पूर्वभाद्रपदामंत्रः॥त्वन्नोऽअग्नेवरु
णस्यविद्वान्देवस्यहेडोऽअवयासिसीष्ठाः॥यजिष्ठोवह्नितमःशोशु
चानोविश्वाद्वेषांꣳसिप्रमुमुग्ध्यस्मत्॥२५॥उत्तराभाद्रपदामंत्रः॥अ
हिरिवभोगैःपर्य्येतिबाहूञ्ज्यायाहेतिम्परिबाधमानः॥हस्तघ्नोविश्वा
वयुनानिविद्वान्पुमान्पुमांꣳसम्परिपातुविश्वतः॥२६॥रेवतीमंत्रः॥पू
षन्तवव्रतेवयन्नरिष्येमकदाचन॥स्तोतारस्तऽइहस्मसि॥२७॥ ॥
इतिश्रीवेदपाठमंत्रसंहितासमाप्ता॥ ॥शुभमस्तु॥ ॥ ॥

( बॉम्बे सिटी प्रेस.)

॥ इति माध्यंदिनीयमंत्रसंहितासमाप्तिः ॥